इत्यत्र यदि ज्ञानक्रिये प्रविष्टे, तर्हि ज्ञानमित्यत्रापि प्रकृति-प्रत्ययसद्भावात् ते प्रविष्टे एव, तत् किं पुनः **'क्रिया'** इति अधिकमभिधीयते। अत्र उच्यते **'ज्ञानमित्यपि'** इति। सत्यमेव-मेकाकिनि अपि अत्र शब्दे इति अपिशब्दः। **'उच्यते'** इति प्रकृतिप्रत्ययभागद्वयेन। **'प्राधान्येन'** इति यद्यपि 'प्रकृति-प्रत्ययौ प्रत्ययार्थं सह ब्रूतः' इति, तथापि तस्य प्रत्ययार्थस्य प्रकृत्यर्थधर्मत्वेन स्फुरणात् धर्मस्य धर्मिणमुद्रेचयतः एव धर्म-त्वात् धर्मिणि प्रत्ययलक्षणे बोधभागे स धर्मः प्राधान्यमुन्मज्ज-यति क्रियेति। **'अपिच'** इति चः समुच्चये। यत्रापि बोधभा-गाभिधायकं भागान्तरं नास्ति, तत्रापि एवमिति अपिशब्दः। अत एव पूर्वत्र **'उच्यते'** इति उक्तम्, इह तु **'आक्षिप्त'** इति। आ-क्षेपहेतुमाह **'अनवबोधस्य'** इति। एतदेवच युक्तमिति दर्श-यति **'वस्तु एकमेव'** इति। ननु विमर्शः कस्मात् माहेश्वर्यम्। आह **'आञ्जस्येन'** इति। अनन्यापेक्षता हि विमर्शः, सैवच स्वतन्त्रता। ननु बोधस्य विमर्शो व्यापकः स्वामी, बोधो हि विमर्शं न व्यभिचरति न त्यजति कदाचित्, ततस्तस्य अव्यभि-चरणे कर्मतायां वाच्यायां कथं कर्तृता उक्ता,—इत्याशङ्क्य सम-व्याप्तिकयोरित्थमभिधानेऽपि न दोषः,—इति ब्रूते **'बोधस्य अव्यभिचरणीयोऽपि विमर्शः सदा'** इति। बोधस्य विम-र्शोऽव्यभिचरणीयः, स चापि बोधोऽव्यभिचरणीयः सामर्थ्यात् विमर्शस्य, तस्मादस्य अव्यभिचारिणो विमर्शस्य अपि कर्तृता न न युक्ता। समव्याप्तिकत्वे हेतुमाह **'अव्यभिचारवत्त्वात्'** इति परस्परेणेति यावत्। एवं कर्तृतामुपपाद्य हेतूक्तिप्रसङ्गस्पृ-तेन व्युत्पत्त्यन्तरेण योजयति **'तदापि'** इति अव्यभिचारवत्त्वं यदुक्तं, ततोऽपि हेतोर्मत्वर्थीयप्रत्ययोपपत्तेर्युज्यते एव इत्थमभि-

धानम् । ननु आत्ममात्रविमर्शोऽसावहमिति, तत्र भावनिर्भरता न विमृष्टैव । नैवमित्याह **'तदाच'** इति । ननु असन्तोऽपि इच्छया उन्मिषेयुरित्याशङ्क्य आह **'इष्यमाण'** इति । नभवने हेतुर्निर्विषयत्वमेव । अवश्यंभाविकर्मपरिग्रहा क्रिया तत्कर्माभावे न भवति जीवनमिव प्राणाभावे, तथाच इषिक्रियेति स्वभाव-विरुद्धोपलब्धिः । ननु एवं भावाभासानवस्थितानपेक्षमाणो विमर्शः कथं शुद्धः । इत्थमिति उच्यते **'एवंच'** इति । अनेन प्रकारेण अहमितिरूपेण यत् भावानामवस्थानं तत् नित्यं परमात्मनो न भिन्नं, तदेवच अहमितिरूपमिति न अस्य अशुद्धिः काचित् । नहि व्यतिरिक्तं तदा किञ्चिदपेक्षितव्य-मस्ति । अथ शुद्धग्रहणस्य व्यावर्त्यं व्याख्यातुमुपक्रमते **'सैव'** इति । शुद्धिमशुद्धिं च विभजति **'शुद्धत्वेऽपि'** इति **'अशु-द्धिहेतुत्वात्'** इति च । आरोपितमेतदशुद्धत्वं, न स्वाभावि-कमहन्तै[1]कान्तविश्रान्तेः । एवमहन्तायाः शुद्धाशुद्धत्वं व्याख्याय, अशुद्धत्वं व्याचष्टे **'सैव'** इति । न असावहन्ता अन्या, अपितु स्वशक्तिवैचित्र्यात् सैव अनेन रूपान्तरेण भाति तत्त्वभुवन-भावभूतप्रभृतिषु अवभासभागेषु । आभासभेदेषु तावत् वस्तुतोऽ-सावहन्ता व्यापकत्वेन अनुप्राणकत्वेन तावदाभासान्तर्भावनेन अवतिष्ठते । तत् तथाभूतं यदहन्तया अवस्थानं तत् यदा इद-न्तावमर्शयोग्यतया तेषामाभासने मायाशक्तिकृतया तिरोहितं, तदा सा अहन्तादशा संसारिणामुचिता योग्या; तस्यां दशायामहं-विमर्शनं यत्, तदशुद्धमुक्तमिति दूरेण सम्बन्धः । अहंविमर्शनस्य स्वरूपं दर्शयति प्रकाशरूपं, क्रियारूपं च भवदपि तथा शक्ति-

---

१ 'अहन्त्वैकार्थं' ख. ।

रूपत्वात् प्रच्युतं, ततो ज्ञानं सत्त्वव्यपदेश्यं, क्रिया रजोव्यपदेश्या तत्र च मध्ये नियामकं तमः प्रविष्टं; तेन गुणत्रयमयमहमिति-विमर्शनं जातं स्वरूपप्रच्युतौ हेतुः। भिन्नमिदंभागावस्थितं यत् बुद्धिप्राणादि, तच्छरीरतया तद्धर्मतया तदहंविमर्शनमुत्पन्नम्, तत उत्पत्तिहेतोः प्रच्युतस्वरूपं तत्। तथोत्पत्तिरस्य कुतः। आह—भिन्नं ग्राह्यमपेक्षमाणं ततो ग्राह्यात् भिन्नं यत् ग्राहकमात्रं स एव भागांशस्तमवगाहते यतः, तस्मादेवमुत्पन्नम्। एवंभूतस्य अहंविमर्शस्य आकारं दर्शयति '**अहमयम्**' इत्यादिना '**करोमि च**' इत्यन्तेन। ननु अत्र ग्राह्यग्राहकयोः कथं भिन्नता। आह '**वैयधिकरण्येन**' इति। ननु पुरुषस्य सत्त्वरजोवृत्तिरूपे ज्ञानक्रिये बुद्धितत्त्वगते अहमिति व्यवह्रियेते,—इति कापिला मन्यन्ते, त्वया का इयमपूर्वा प्रक्रिया उत्थापिता। न अपूर्वा काचित्। नहि पुरुषो नाम अन्यः, अपितु ऐश्वर्यस्य निजस्य यदप्रत्यभिज्ञानं, तदेव प्रकृतं रूपं यस्य सङ्कुचितसंविल्लक्षणस्य, स पुरुषः। तत्सम्बन्धिन्यौ ये ज्ञानक्रिये, तत्स्वभावं तदहं-विमर्शनम्। एतच्च

'स स्वरूपापरिज्ञानमयोऽनेकः पुमान्····।' (४।१।३)

इत्यस्मिन् प्रकरणे वितनिष्यते। '**अनूदितम्**' इति वृत्तौ। अनुवदनं च अत्र भित्तिकल्पत्वेन, नतु 'यत्र यत्र धूमः' इत्यनेन न्यायेन। एवंहि सति धूमवत्त्वं यथा अग्निमत्त्वस्य विधेयस्य व्यापकं, तथा अहंविमर्शनमपि शुद्धव्यामिश्राशुद्धानां दशानां स्यात्, भित्तिकल्पतया तु यत् पूर्वसिद्धत्वेन यदनुवदनम्, तद-नुवदनीयस्य व्यापकतामाचष्टे। एतदर्थद्योतकश्च एवकारो-ऽग्निमानेव धूमवानिति यथा। ननु त्रिविधं सदहंविमर्शन-

मुक्तं शुद्धादिभेदेन, तत्र आगमसिद्धं परव्यामिश्रापरलक्षणं दशान्तरत्रितयं किं त्यक्तमेव । न त्यक्तं, सङ्गृहीतमेव,—इत्याह **'एता एवच'** इति । **'वक्ष्यन्ते'** इति

'अत्रापरत्वं भावानाम्............ ।' ( ३।१।५ )

इति सूत्रेण ॥ ११ ॥

इति श्रीमहामाहेश्वरश्रीमदाचार्याभिनवगुप्तपादविरचितायामीश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्यां शक्तिवर्गैकाश्रयगतमाहेश्वर्यविमर्शोऽष्टमः ॥ ८ ॥

**समाप्तश्च अयं ज्ञानाधिकारः प्रथमः ॥**

